# वर्णक्रमदर्पणम्

प्रणम्य शंभोश्चरणाब्जयुग्मं वाणया गणेशस्य तथा गुरूणां
सतां मुदे तित्तिरिसंहितायां करोमि वर्णक्रमदर्पणाख्यम् १
तत्रादौ प्रातिशाख्योक्तानि पारिभाषिकसूत्राणि प्रदर्श्यन्ते ।
अथ वर्णसमाम्नायः । अथशब्दो मंगळार्थः ।
तथोक्तं--
ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा
कंठं भित्वा विनिर्यातौ तस्मान्मांगळिकावुभौ ॥
इति यद्वा आनंतयोर्थोथ शब्दः । तथोक्तं
लिंगानुशासने--
मंगळानंतरंभे प्रश्नकात्स्न्र्येष्वभो अथ ॥
इति । पदाद्ध्ययने जाते सति
लक्षणस्यावसरत्वात्तदभ्यासः कर्तव्य इत्यनंतर्यार्थः ।
संहिताध्ययनं प्रथमं कर्तव्यमनंतरं पदाद्ध्ययनं ततः
प्रथमाद्ध्ययनमिति विज्ञेयम्

## अन्तिमाः श्लोकाः

दृष्ट्वा यमा निवर्तन्ते अत्यन्तसूक्ष्ममाचरेत्
सरेफे वा हकारे वा द्विर्भावो जायते क्वचित् ॥
न च वर्गद्वितीयस्य न चतुर्थे कदाचन ।

इति । स्पर्शोर्ध्वौ भक्तिर्वातो सषयोगे व्यंजनयोर्मध्ये ।
ह्रस्वान्नादो द्विमात्र स्यादन्यत्रत्वेकमात्रिक ।

इति । हरिः ओम् । श्रीकृष्णार्पणमस्तु

Reference:

Varṇakrama Darpaṇam, in C.K. Raja and K.M.K. Sarma, *Descriptive Catalogue of Sanskrit Manuscripts in the Adyar Library, Volume 1: Vedic,* Adyar Library and Research Center: Madras, 1942.